# महाभारत - स्वर्गारोहण पर्व

# ॥ महाभारत स्वर्गारोहणपर्व ॥

## स्वर्गारोहणपर्व

## स्वर्गे नारदवाक्यम्

### अध्याय ००१

जनमेजय उवाच ॥

स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ ००१ ॥

एतदिच्छाम्यहं श्रोतुं सर्वविच्चासि मे मतः ।
महर्षिणाभ्यनुज्ञातो व्यासेनाद्भुतकर्मणा ॥ ००२ ॥

वैशंपायन उवाच ॥

स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः ।
युधिष्ठिरप्रभृतयो यदकुर्वत तच्छृणु ॥ ००३ ॥

स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ॥ ००४ ॥

भ्राजमानमिवादित्यं वीरलक्ष्म्याभिसंवृतम् ।
देवैर्भ्राजिष्णुभिः साध्यैः सहितं पुण्यकर्मभिः ॥ ००५ ॥

ततो युधिष्ठिरो दृष्ट्वा दुर्योधनममर्षितः ।
सहसा संनिवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ॥ ००६ ॥

ब्रुवन्नुच्चैर्वचस्तान्वै नाहं दुर्योधनेन वै ।
सहितः कामये लोका.ण्ल्लुब्धेनादीर्घदर्शिना ॥ ००७ ॥

यत्कृते पृथिवी सर्वा सुहृदो बान्धवास्तथा ।
हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं महावने ॥ ००८ ॥

द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी ।
परिक्लिष्टानवद्याङ्गी पत्नी नो गुरुसंनिधौ ॥ ००९ ॥

स्वस्ति देवा न मे कामः सुयोधनमुदीक्षितुम् ।
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ ०१० ॥

मैवमित्यब्रवीत्तं तु नारदः प्रहसन्निव ।
स्वर्गे निवासो राजेन्द्र विरुद्धं चापि नश्यति ॥ ०११ ॥

युधिष्ठिर महाबाहो मैवं वोचः कथञ्चन ।
दुर्योधनं प्रति नृपं शृणु चेदं वचो मम ॥ ०१२ ॥

एष दुर्योधनो राजा पूज्यते त्रिदशैः सह ।
सद्भिश्च राजप्रवरैर्य इमे स्वर्गवासिनः ॥ ०१३ ॥

वीरलोकगतिं प्राप्तो युद्धे हुत्वात्मनस्तनुम् ।
यूयं सर्वे सुरसमा येन युद्धे समासिताः ॥ ०१४ ॥

स एष क्षत्रधर्मेण स्थानमेतदवाप्तवान् ।
भये महति योऽभीतो बभूव पृथिवीपतिः ॥ ०१५ ॥

न तन्मनसि कर्तव्यं पुत्र यद्द्यूतकारितम् ।
द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि ॥ ०१६ ॥

ये चान्येऽपि परिक्लेशा युष्माकं द्यूतकारिताः ।
सङ्ग्रामेष्वथ वान्यत्र न तान्संस्मर्तुमर्हसि ॥ ०१७ ॥

समागच्छ यथान्यायं राज्ञा दुर्योधनेन वै ।
स्वर्गोऽयं नेह वैराणि भवन्ति मनुजाधिप ॥ ०१८ ॥

नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः ।
भ्रातॄन्पप्रच्छ मेधावी वाक्यमेतदुवाच ह ॥ ०१९ ॥

यदि दुर्योधनस्यैते वीरलोकाः सनातनाः ।
अधर्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः ॥ ०२० ॥

यत्कृते पृथिवी नष्टा सहया सरथद्विपा ।
वयं च मन्युना दग्धा वैरं प्रतिचिकीर्षवः ॥ ०२१ ॥

ये ते वीरा महात्मानो भ्रातरो मे महाव्रताः ।
सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः ॥ ०२२ ॥

तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहम् ।
कर्णं चैव महात्मानं कौन्तेयं सत्यसङ्गरम् ॥ ०२३ ॥

धृष्टद्युम्नं सात्यकिं च धृष्टद्युम्नस्य चात्मजान् ।
ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्मेण पार्थिवाः ॥ ०२४ ॥

क्व नु ते पार्थिवा ब्रह्मन्नैतान्पश्यामि नारद ।

विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान् ॥ ०२५ ॥

शिखण्डिनं च पाञ्चाल्यं द्रौपदेयांश्च सर्वशः ।
अभिमन्युं च दुर्धर्षं द्रष्टुमिच्छामि नारद ॥ ०२६ ॥

---

# देवदूतविसर्जनम्

## अध्याय ००२

युधिष्ठिर उवाच ॥

नेह पश्यामि विबुधा राधेयममितौजसम् ।
भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ ॥ ००१ ॥

जुहुवुर्ये शरीराणि रणवह्नौ महारथाः ।
राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ ००२ ॥

क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः ।
तैरप्ययं जितो लोकः कच्चित्पुरुषसत्तमैः ॥ ००३ ॥

यदि लोकानिमान्प्राप्तास्ते च सर्वे महारथाः ।
स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः ॥ ००४ ॥

कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽक्षयः शुभः ।
न तैरहं विना वत्स्ये ज्ञातिभिर्भ्रातृभिस्तथा ॥ ००५ ॥

मातुर्हि वचनं श्रुत्वा तदा सलिलकर्मणि ।

कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै ॥ ००६ ॥

इदं च परितप्यामि पुनः पुनरहं सुराः ।
यन्मातुः सदृशौ पादौ तस्याहममितौजसः ॥ ००७ ॥

दृष्ट्वैव तं नानुगतः कर्णं परबलार्दनम् ।
न ह्यस्मान्कर्णसहिताञ्जयेच्छक्रोऽपि संयुगे ॥ ००८ ॥

तमहं यत्रतत्रस्थं द्रष्टुमिच्छामि सूर्यजम् ।
अविज्ञातो मया योऽसौ घातितः सव्यसाचिना ॥ ००९ ॥

भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम ।
अर्जुनं चेन्द्रसङ्काशं यमौ तौ च यमोपमौ ॥ ०१० ॥

द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्मचारिणीम् ।
न चेह स्थातुमिच्छामि सत्यमेतद्ब्रवीमि वः ॥ ०११ ॥

किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः ।
यत्र ते स मम स्वर्गो नायं स्वर्गो मतो मम ॥ ०१२ ॥

देवा ऊचुः ॥

यदि वै तत्र ते श्रद्धा गम्यतां पुत्र माचिरम् ।
प्रिये हि तव वर्तामो देवराजस्य शासनात् ॥ ०१३ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् ।
युधिष्ठिरस्य सुहृदो दर्शयेति परंतप ॥ ०१४ ॥

ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः ।

सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥ ०१५ ॥

अग्रतो देवदूतस्तु ययौ राजा च पृष्ठतः ।
पन्थानमशुभं दुर्गं सेवितं पापकर्मभिः ॥ ०१६ ॥

तमसा संवृतं घोरं केशशैवलशाद्वलम् ।
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ॥ ०१७ ॥

दंशोत्थानं सझिल्लीकं मक्षिकामशकावृतम् ।
इतश्चेतश्च कुणपैः समन्तात्परिवारितम् ॥ ०१८ ॥

अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम् ।
ज्वलनेन प्रदीप्तेन समन्तात्परिवेष्टितम् ॥ ०१९ ॥

अयोमुखैश्च काकोलैर्गृध्रैश्च समभिद्रुतम् ।
सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् ॥ ०२० ॥

मेदोरुधिरयुक्तैश्च छिन्नबाहूरुपाणिभिः ।
निकृत्तोदरपादैश्च तत्र तत्र प्रवेरितैः ॥ ०२१ ॥

स तत्कुणपदुर्गन्धमशिवं रोमहर्षणम् ।
जगाम राजा धर्मात्मा मध्ये बहु विचिन्तयन् ॥ ०२२ ॥

ददर्शोष्णोदकैः पूर्णां नदीं चापि सुदुर्गमाम् ।
असिपत्रवनं चैव निशितक्षुरसंवृतम् ॥ ०२३ ॥

करम्भवालुकास्तप्ता आयसीश्च शिलाः पृथक् ।
लोहकुम्भीश्च तैलस्य क्वाथ्यमानाः समन्ततः ॥ ०२४ ॥

कूटशाल्मलिकं चापि दुस्पर्शं तीक्ष्णकण्टकम् ।
ददर्श चापि कौन्तेयो यातनाः पापकर्मिणाम् ॥ ०२५ ॥

स तं दुर्गन्धमालक्ष्य देवदूतमुवाच ह ।
कियदध्वानमस्माभिर्गन्तव्यमिदमीदृशम् ॥ ०२६ ॥

क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि ।
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ॥ ०२७ ॥

स संनिववृते श्रुत्वा धर्मराजस्य भाषितम् ।
देवदूतोऽब्रवीच्चैनमेतावद्गमनं तव ॥ ०२८ ॥

निवर्तितव्यं हि मया तथास्म्युक्तो दिवौकसैः ।
यदि श्रान्तोऽसि राजेन्द्र त्वमथागन्तुमर्हसि ॥ ०२९ ॥

युधिष्ठिरस्तु निर्विण्णस्तेन गन्धेन मूर्छितः ।
निवर्तने धृतमनाः पर्यावर्तत भारत ॥ ०३० ॥

स संनिवृत्तो धर्मात्मा दुःखशोकसमन्वितः ।
शुश्राव तत्र वदतां दीना वाचः समन्ततः ॥ ०३१ ॥

भो भो धर्मज राजर्षे पुण्याभिजन पाण्डव ।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ ०३२ ॥

आयाति त्वयि दुर्धर्षे वाति पुण्यः समीरणः ।
तव गन्धानुगस्तात येनास्मान्सुखमागमत् ॥ ०३३ ॥

ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ ।
सुखमासादयिष्यामस्त्वां दृष्ट्वा राजसत्तम ॥ ०३४ ॥

संतिष्ठस्व महाबाहो मुहूर्तमपि भारत ।
त्वयि तिष्ठति कौरव्य यातनास्मान्न बाधते ॥ ०३५ ॥

एवं बहुविधा वाचः कृपणा वेदनावताम् ।
तस्मिन्देशे स शुश्राव समन्ताद्वदतां नृप ॥ ०३६ ॥

तेषां तद्वचनं श्रुत्वा दयावान्दीनभाषिणाम् ।
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ॥ ०३७ ॥

स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनः पुनः ।
ग्लानानां दुःखितानां च नाभ्यजानत पाण्डवः ॥ ०३८ ॥

अबुध्यमानस्ता वाचो धर्मपुत्रो युधिष्ठिरः ।
उवाच के भवन्तो वै किमर्थमिह तिष्ठथ ॥ ०३९ ॥

इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे ।
कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥ ०४० ॥

नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ।
द्रौपदी द्रौपदेयाश्च इत्येवं ते विचुक्रुशुः ॥ ०४१ ॥

ता वाचः सा तदा श्रुत्वा तद्देशसदृशीर्नृप ।
ततो विममृशे राजा किं न्विदं दैवकारितम् ॥ ०४२ ॥

किं नु तत्कलुषं कर्म कृतमेभिर्महात्मभिः ।
कर्णेन द्रौपदेयैर्वा पाञ्चाल्या वा सुमध्यया ॥ ०४३ ॥

य इमे पापगन्धेऽस्मिन्देशे सन्ति सुदारुणे ।
न हि जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ॥ ०४४ ॥

किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापः सह सर्वैः पदानुगैः ॥ ०४५ ॥

महेन्द्र इव लक्ष्मीवानास्ते परमपूजितः ।

कस्येदानीं विकारोऽयं यदिमे नरकं गताः ॥ ०४६ ॥

सर्वधर्मविदः शूराः सत्यागमपरायणाः ।
क्षात्रधर्मपराः प्राज्ञा यज्वानो भूरिदक्षिणाः ॥ ०४७ ॥

किं नु सुप्तोऽस्मि जागर्मि चेतयानो न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥ ०४८ ॥

एवं बहुविधं राजा विममर्श युधिष्ठिरः ।
दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥ ०४९ ॥

क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥ ०५० ॥

स तीव्रगन्धसंतप्तो देवदूतमुवाच ह ।
गम्यतां भद्र येषां त्वं दूतस्तेषामुपान्तिकम् ॥ ०५१ ॥

न ह्यहं तत्र यास्यामि स्थितोऽस्मीति निवेद्यताम् ।
मत्संश्रयादिमे दूत सुखिनो भ्रातरो हि मे ॥ ०५२ ॥

इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता ।
जगाम तत्र यत्रास्ते देवराजः शतक्रतुः ॥ ०५३ ॥

निवेदयामास च तद्धर्मराजचिकीर्षितम् ।
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ०५४ ॥

# युधिष्ठिरस्वर्गारोहणम्

## अध्याय ००३

वैशंपायन उवाच ॥

स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिरे ।
आजग्मुस्तत्र कौरव्य देवाः शक्रपुरोगमाः ॥ ००१ ॥

स्वयं विग्रहवान्धर्मो राजानं प्रसमीक्षितुम् ।
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ ००२ ॥

तेषु भास्वरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ ००३ ॥

नादृश्यन्त च तास्तत्र यातनाः पापकर्मिणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ ००४ ॥

लोहकुम्भ्यः शिलाश्चैव नादृश्यन्त भयानकाः ।
विकृतानि शरीराणि यानि तत्र समन्ततः ॥ ००५ ॥

ददर्श राजा कौन्तेयस्तान्यदृश्यानि चाभवन् ॥ ००५ ॥

ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शिवः ।
ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥ ००६ ॥

मरुतः सह शक्रेण वसवश्चाश्विनौ सह ।
साध्या रुद्रास्तथादित्या ये चान्येऽपि दिवौकसः ॥ ००७ ॥

सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ॥ ००८ ॥

ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥ ००९ ॥

युधिष्ठिर महाबाहो प्रीता देवगणास्तव ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥ ०१० ॥

सिद्धिः प्राप्ता त्वया राज.णल्लोकाश्चाप्यक्षयास्तव ॥ ०१० ॥

न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ।
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ॥ ०११ ॥

शुभानामशुभानां च द्वौ राशी पुरुषर्षभ ।
यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ॥ ०१२ ॥

पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ॥ ०१२ ॥

भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते ।
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ ०१३ ॥

व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति ।
व्याजेनैव ततो राजन्दर्शितो नरकस्तव ॥ ०१४ ॥

यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ॥ ०१५ ॥

आगच्छ नरशार्दूल मुक्तास्ते चैव किल्बिषात् ।
स्वपक्षाश्चैव ये तुभ्यं पार्थिवा निहता रणे ॥ ०१६ ॥

सर्वे स्वर्गमनुप्राप्तास्तान्पश्य पुरुषर्षभ ॥ ०१६ ॥

कर्णश्चैव महेष्वासः सर्वशस्त्रभृतां वरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥ ०१७ ॥

तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो ।
स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ ॥ ०१८ ॥

भ्रातॄंश्चान्यांस्तथा पश्य स्वपक्षांश्चैव पार्थिवान् ।
स्वं स्वं स्थानमनुप्राप्तान्व्येतु ते मानसो ज्वरः ॥ ०१९ ॥

अनुभूय पूर्वं त्वं कृच्छ्रमितः प्रभृति कौरव ।
विहरस्व मया सार्धं गतशोको निरामयः ॥ ०२० ॥

कर्मणां तात पुण्यानां जितानां तपसा स्वयम् ।
दानानां च महाबाहो फलं प्राप्नुहि पाण्डव ॥ ०२१ ॥

अद्य त्वां देवगन्धर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याणं विरजोम्बरवाससः ॥ ०२२ ॥

राजसूयजिता.ण्ल्लोकानश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च फलं महत् ॥ ०२३ ॥

उपर्युपरि राज्ञां हि तव लोका युधिष्ठिर ।
हरिश्चन्द्रसमाः पार्थ येषु त्वं विहरिष्यसि ॥ ०२४ ॥

मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः ।
दौःषन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ॥ ०२५ ॥

एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्द्र तत्राप्लुत्य गमिष्यसि ॥ ०२६ ॥

अत्र स्नातस्य ते भावो मानुषो विगमिष्यति ।

गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ ०२७ ॥

एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम् ।
धर्मो विग्रहवान्साक्षादुवाच सुतमात्मनः ॥ ०२८ ॥

भो भो राजन्महाप्राज्ञ प्रीतोऽस्मि तव पुत्रक ।
मद्भक्त्या सत्यवाक्येन क्षमया च दमेन च ॥ ०२९ ॥

एषा तृतीया जिज्ञासा तव राजन्कृता मया ।
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुभिः ॥ ०३० ॥

पूर्वं परीक्षितो हि त्वमासीर्द्वैतवनं प्रति ।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ ०३१ ॥

सोदर्येषु विनष्टेषु द्रौपद्यां तत्र भारत ।
श्वरूपधारिणा पुत्र पुनस्त्वं मे परीक्षितः ॥ ०३२ ॥

इदं तृतीयं भ्रातृणामर्थे यत्स्थातुमिच्छसि ।
विशुद्धोऽसि महाभाग सुखी विगतकल्मषः ॥ ०३३ ॥

न च ते भ्रातरः पार्थ नरकस्था विशां पते ।
मायैषा देवराजेन महेन्द्रेण प्रयोजिता ॥ ०३४ ॥

अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ।
ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ॥ ०३५ ॥

न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ ।
कर्णो वा सत्यवाक्शूरो नरकार्हाश्चिरं नृप ॥ ०३६ ॥

न कृष्णा राजपुत्री च नरकार्हा युधिष्ठिर ।
एह्येहि भरतश्रेष्ठ पश्य गङ्गां त्रिलोकगाम् ॥ ०३७ ॥

एवमुक्तः स राजर्षिस्तव पूर्वपितामहः ।
जगाम सह धर्मेण सर्वैश्च त्रिदशालयैः ॥ ०३८ ॥

गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् ।
अवगाह्य तु तां राजा तनुं तत्याज मानुषीम् ॥ ०३९ ॥

ततो दिव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः ।
निर्वैरो गतसंतापो जले तस्मिन्समाप्लुतः ॥ ०४० ॥

ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमान्स्तूयमानो महर्षिभिः ॥ ०४१ ॥

---

# अध्याय ००४

वैशंपायन उवाच ॥

ततो युधिष्ठिरो राजा देवैः सर्षिमरुद्गणैः ।
पूज्यमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः ॥ ००१ ॥

ददर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् ।
तेनैव दृष्टपूर्वेण सादृश्येनोपसूचितम् ॥ ००२ ॥

दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् ।
चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ॥ ००३ ॥

उपास्यमानं वीरेण फल्गुनेन सुवर्चसा ॥ ००३ ॥

अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरम् ।
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ॥ ००४ ॥

अथापरस्मिन्नुद्देशे मरुद्गणवृतं प्रभुम् ।
भीमसेनमथापश्यत्तेनैव वपुषान्वितम् ॥ ००५ ॥

अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा ।
नकुलं सहदेवं च ददर्श कुरुनन्दनः ॥ ००६ ॥

तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम् ॥ ००७ ॥

अथैनां सहसा राजा प्रष्टुमैच्छद्युधिष्ठिरः ।
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ॥ ००८ ॥

श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता ।
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ॥ ००९ ॥

द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ।
रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना ॥ ०१० ॥

एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन्युष्माकममितौजसः ॥ ०११ ॥

पश्य गन्धर्वराजानं धृतराष्ट्रं मनीषिणम् ।
एनं च त्वं विजानीहि भ्रातरं पूर्वजं पितुः ॥ ०१२ ॥

अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्यपुत्रोऽग्रजः श्रेष्ठो राधेय इति विश्रुतः ॥ ०१३ ॥

आदित्यसहितो याति पश्यैनं पुरुषर्षभ ॥ ०१३ ॥

साध्यानामथ देवानां वसूनां मरुतामपि ।
गणेषु पश्य राजेन्द्र वृष्ण्यन्धकमहारथान् ॥ ०१४ ॥

सात्यकिप्रमुखान्वीरान्भोजांश्चैव महारथान् ॥ ०१४ ॥

सोमेन सहितं पश्य सौभद्रमपराजितम् ।
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥ ०१५ ॥

एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च सङ्गतः ।
विमानेन सदाभ्येति पिता तव ममान्तिकम् ॥ ०१६ ॥

वसुभिः सहितं पश्य भीष्मं शांतनवं नृपम् ।
द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय ॥ ०१७ ॥

एते चान्ये महीपाला योधास्तव च पाण्डव ।
गन्धर्वैः सहिता यान्ति यक्षैः पुण्यजनैस्तथा ॥ ०१८ ॥

गुह्यकानां गतिं चापि केचित्प्राप्ता नृसत्तमाः ।
त्यक्त्वा देहं जितस्वर्गाः पुण्यवाग्बुद्धिकर्मभिः ॥ ०१९ ॥

---

# अध्याय ००५

जनमेजय उवाच ॥

भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः ।
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥ ००१ ॥

धृष्टकेतुर्जयत्सेनो राजा चैव स सत्यजित् ।
दुर्योधनसुताश्चैव शकुनिश्चैव सौबलः ॥ ००२ ॥

कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः ।
घटोत्कचादयश्चैव ये चान्ये नानुकीर्तिताः ॥ ००३ ॥

ये चान्ये कीर्तितास्तत्र राजानो दीप्तमूर्तयः ।
स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ॥ ००४ ॥

आहो स्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम ।
अन्ते वा कर्मणः कां ते गतिं प्राप्ता नरर्षभाः ॥ ००५ ॥

एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं त्वया द्विज ॥ ००५ ॥

सूत उवाच ॥

इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना ।
व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे ॥ ००६ ॥

वैशंपायन उवाच ॥

गन्तव्यं कर्मणामन्ते सर्वेण मनुजाधिप ।
शृणु गुह्यमिदं राजन्देवानां भरतर्षभ ॥ ००७ ॥

यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ॥ ००७ ॥

मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः ।
अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् ॥ ००८ ॥

वसूनेव महातेजा भीष्मः प्राप महाद्युतिः ।

अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ॥ ००९ ॥

बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां वरम् ।
कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणम् ॥ ०१० ॥

सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।
धृतराष्ट्रो धनेशस्य लोकान्प्राप दुरासदान् ॥ ०११ ॥

धृतराष्ट्रेण सहिता गान्धारी च यशस्विनी ।
पत्नीभ्यां सहितः पाण्डुर्महेन्द्रसदनं ययौ ॥ ०१२ ॥

विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।
निशठाक्रूरसाम्बाश्च भानुः कम्पो विडूरथः ॥ ०१३ ॥

भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः ।
उग्रसेनस्तथा कंसो वसुदेवश्च वीर्यवान् ॥ ०१४ ॥

उत्तरश्च सह भ्रात्रा शङ्खेन नरपुङ्गवः ।
विश्वेषां देवतानां ते विविशुर्नरसत्तमाः ॥ ०१५ ॥

वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान् ।
सोऽभिमन्युर्नृसिंहस्य फल्गुनस्य सुतोऽभवत् ॥ ०१६ ॥

स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान्क्वचित् ।
विवेश सोमं धर्मात्मा कर्मणोऽन्ते महारथः ॥ ०१७ ॥

आविवेश रविं कर्णः पितरं पुरुषर्षभ ।
द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् ॥ ०१८ ॥

धृतराष्ट्रात्मजाः सर्वे यातुधाना बलोत्कटाः ।
ऋद्धिमन्तो महात्मानः शस्त्रपूता दिवं गताः ॥ ०१९ ॥

धर्ममेवाविशत्क्षत्ता राजा चैव युधिष्ठिरः ॥ ०१९ ॥

अनन्तो भगवान्देवः प्रविवेश रसातलम् ।
पितामहनियोगाद्धि यो योगाद्गामधारयत् ॥ ०२० ॥

षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहः ।
न्यमज्जन्त सरस्वत्यां कालेन जनमेजय ॥ ०२१ ॥

ताश्चाप्यप्सरसो भूत्वा वासुदेवमुपागमन् ॥ ०२१ ॥

हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः ।
घटोत्कचादयः सर्वे देवान्यक्षांश्च भेजिरे ॥ ०२२ ॥

दुर्योधनसहायाश्च राक्षसाः परिकीर्तिताः ।
प्राप्तास्ते क्रमशो राजन्सर्वलोकाननुत्तमान् ॥ ०२३ ॥

भवनं च महेन्द्रस्य कुबेरस्य च धीमतः ।
वरुणस्य तथा लोकान्विविशुः पुरुषर्षभाः ॥ ०२४ ॥

एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत ॥ ०२५ ॥

सूत उवाच ॥

एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ ०२६ ॥

ततः समापयामासुः कर्म तत्तस्य याजकाः ।
आस्तीकश्चाभवत्प्रीतः परिमोक्ष्य भुजङ्गमान् ॥ ०२७ ॥

ततो द्विजातीन्सर्वांस्तान्दक्षिणाभिरतोषयत् ।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ ०२८ ॥

विसर्जयित्वा विप्रांस्तान्राजापि जनमेजयः ।
ततस्तक्षशिलायाः स पुनरायाद्गजाह्वयम् ॥ ०२९ ॥

एतत्ते सर्वमाख्यातं वैशंपायनकीर्तितम् ।
व्यासाज्ञया समाख्यातं सर्पसत्रे नृपस्य ह ॥ ०३० ॥

पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम् ।
कृष्णेन मुनिना विप्र नियतं सत्यवादिना ॥ ०३१ ॥

सर्वज्ञेन विधिज्ञेन धर्मज्ञानवता सता ।
अतीन्द्रियेण शुचिना तपसा भावितात्मना ॥ ०३२ ॥

ऐश्वर्ये वर्तता चैव सांख्ययोगविदा तथा ।
नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा ॥ ०३३ ॥

कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ ०३४ ॥

य इदं श्रावयेद्विद्वान्सदा पर्वणि पर्वणि ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय गच्छति ॥ ०३५ ॥

यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ ०३६ ॥

अह्ना यदेनः कुरुते इन्द्रियैर्मनसापि वा ।
महाभारतमाख्याय पश्चात्संध्यां प्रमुच्यते ॥ ०३७ ॥

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥ ०३८ ॥

जयो नामेतिहासोऽयं श्रोतव्यो भूतिमिच्छता ।
राज्ञा राजसुतैश्चापि गर्भिण्या चैव योषिता ॥ ०३९ ॥

स्वर्गकामो लभेत्स्वर्गं जयकामो लभेज्जयम् ।
गर्भिणी लभते पुत्रं कन्यां वा बहुभागिनीम् ॥ ०४० ॥

अनागतं त्रिभिर्वर्षैः कृष्णद्वैपायनः प्रभुः ।
संदर्भं भारतस्यास्य कृतवान्धर्मकाम्यया ॥ ०४१ ॥

नारदोऽश्रावयद्देवानसितो देवलः पितॄन् ।
रक्षो यक्षाञ्शुको मर्त्यान्वैशंपायन एव तु ॥ ०४२ ॥

इतिहासमिमं पुण्यं महार्थं वेदसंमितम् ।
श्रावयेद्यस्तु वर्णांस्त्रीन्कृत्वा ब्राह्मणमग्रतः ॥ ०४३ ॥

स नरः पापनिर्मुक्तः कीर्तिं प्राप्येह शौनक ।
गच्छेत्परमिकां सिद्धिमत्र मे नास्ति संशयः ॥ ०४४ ॥

भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ ०४५ ॥

महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा ।
श्लोकैश्चतुर्भिर्भगवान्पुत्रमध्यापयच्छुकम् ॥ ०४६ ॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ ०४७ ॥

हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ०४८ ॥

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ०४९ ॥

न जातु कामान्न भयान्न लोभा ;द्धर्मं त्यजेज्जीवितस्यापि हेतोः ।
नित्यो धर्मः सुखदुःखे त्वनित्ये ; जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ०५० ॥

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ०५१ ॥

यथा समुद्रो भगवान्यथा च हिमवान्गिरिः ।
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ॥ ०५२ ॥

महाभारतमाख्यानं यः पठेत्सुसमाहितः ।
स गच्छेत्परमां सिद्धिमिति मे नास्ति संशयः ॥ ०५३ ॥

द्वैपायनोष्ठपुटनिःसृतमप्रमेयं ; पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं ; किं तस्य पुष्करजलैरभिषेचनेन ॥ ०५४
॥

---